# सूर्योदयः

प्रातःस्मरणीयभगवत्पूज्यपादमहर्षिश्रीज्ञानानन्दस्वामिचरणानाम्

## स्मारकस्त्रैभाषिकोविशिष्टाङ्कः





उद्गमस्थानम्

श्रीभारतधर्ममहामण्डलम्

जगत्गञ्ज, काशी

२००८ वैक्रमवर्षे, १९५१ ईशवीये

मूल्यम् मुद्राद्वयम्

# श्रीभारतधर्ममहामण्डल के सभ्य होनेके नियम ।



१—महामण्डलके संरक्षक, प्रतिनिधि, सहायक और सहयोगी, इस प्रकार चार श्रेणी के सभ्य होते हैं ।

२—महामण्डलके सभ्य निःशुल्क होंगे—श्रीभारतधर्ममहामण्डलके संरक्षक, प्रतिनिधि, सहायक और सहयोगी सभ्य होनेके लिये किसी शुल्कका नियम नहीं रहेगा। यदि कोई सज्जन अपनी स्वेच्छासे कुछ सहायता देना चाहेंगे, तो वह दे सकेंगे ।

३—जो धर्म-प्रतिष्ठान इस संस्थासे सम्बन्धित होना चाहें, उनसे भी किसी प्रकारका शुल्क नहीं लिया जाता है । अखिल भारतीय धार्मिकाध्यात्मिक-संस्कृत विश्वविद्यालयके प्रान्तोंमें जो परीक्षा केन्द्र हैं, उनसे भी किसी प्रकारका शुल्क नहीं लिया जाता है, बल्कि परीक्षाके समय केन्द्रोंमें जो व्यय होता है, वह भी प्रधान कार्यालयसे दिया जाता है ।

४—धार्मिक शिक्षाविस्तार, संस्कृत और हिन्दी भाषाके प्रचारके अभिप्रायसे जो महानुभाव अथवा जो विद्याप्रतिष्ठान विश्वविद्यालयकी परीक्षाके केन्द्र खोलना चाहें, वे अध्यक्ष-संस्कृत विश्वविद्यालय महामण्डल भवन, जगतगञ्ज, बनारस के पतेपर पत्र भेजें ।

---



# सूर्योदय ।

[वर्ष २६, संख्या ३,४,५,६ मीनसे मिथुन संक्रान्ति ( २००८ वै० ) तदनुसार मार्चसे जून (१९५१ ई०) तक ।]

## श्रीचरणस्मरणाङ्कको विषय-सूची

### संस्कृत विभाग



### हिन्दी विभाग

## अंग्रेजी विभाग



भगवत्पूज्यपाद महर्षि स्वामी श्रीज्ञानानन्दजी महाराज

[ आविर्भाव सं० १९०२ जन्माष्टमी अर्धरात्रि, तिरोभाव
सं० २००७ म.घकृष्ण ५ ब्राह्ममुहूर्त ]

# सूर्योदयः

[ श्रीचरणस्मरणरूपस्त्रैभाषिको विशिष्टाङ्कः

( श्रीभारतधर्ममहामण्डलस्य मासिकं संस्कृतमुखपत्रम् )

( अग्रिमं वार्षिकं मूल्यं मुद्राद्वयम् )

२६ तमे वर्षे, ३,४,५,६ संख्याः] मीनमेषवृषमिथुनसंक्रान्तयः, २००८ वै०, [मार्चतो जून-पर्यन्तम् सन् १९५१ ई०

## सद्गुरुस्तोत्रम् ।

ब्रह्मानन्दं परमसुखदं केवलज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ १ ॥

चैतन्यं शाश्वतंशान्तं व्योमातीतं निरञ्जनम् ।
नादबिन्दुकलातीतं गुरुं ब्रह्म नमाम्यहम् ॥ २ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः ॥ ३ ॥

ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ।
मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ ४ ॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ५ ॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ६ ॥

# सम्पादकीया अभिप्रायाः।

## दर्शनेषु श्रीचरणानां मतम्

यथा हि मानवसमाजे शिल्प-विज्ञानोन्नत्या तदीयबहिर्जगतः समुन्नतिः प्रत्यक्षीक्रियते तथैव दर्शन-शास्त्रोन्नत्या तदीयान्तर्जगतः समुन्नतिः परिचीयते। यो हि मानवसमाजो यदा यादृशः शिल्पविज्ञानोन्नति-साधन-सम्पन्नो दृश्यते स तादृश एव बहिर्जगतिकोन्नतिपथाग्रणीर्गण्यते। शिल्पोन्नत्या सहैव मानव-समाजे पदार्थविज्ञानोन्नतिर्भवति। पदार्थविज्ञानञ्च कदापि सर्वोच्चस्थानमधिकर्तुं नैवार्हति, तथापि तदुन्नति-परिमाणानुसारमेव मानव-समाजस्य बहिर्जगदुन्नति-परिमाणमनुमीयते। सूक्ष्मातिसूक्ष्मस्यातीन्द्रियस्यान्तर्जगतोऽधिगमायाऽवलम्बनमेकं दर्शनशास्त्रमेव केवलं विद्यते। स्थूलजगद्राज्यातीतस्यानन्तवैचित्र्य-पूर्णस्य सूक्ष्मजगद्राज्यस्यानन्तपारावारस्य ध्रुवतारायितं दर्शनशास्त्रमेव निगद्यते। सूक्ष्मजगद्राज्ये प्रविविक्षुः साधकः केवलं दर्शनशास्त्रसाहाय्येनैव तत्र प्रवेशं लब्धुं योग्यो भवति। यथाहि स्थूलनेत्रविहीनो जनः स्थूलजगद्दृश्यं द्रष्टुं सर्वथैवासमर्थस्तथैव दर्शन-शास्त्र-ज्ञानशून्यो मानवः सूक्ष्म-जगद्विषयं वेदितुं सर्वथैवासक्त इति निश्चितम्। इत्यतश्चेदं पर्यवस्यति यद् यद्धि शास्त्रं सूक्ष्मस्य जगतो वास्तविकं स्वरूपं साधु निरूपयति, तद्धि दर्शनशास्त्रमभिधीयत इति। जगतो लौकिकेतिहासग्रन्थनिरीक्षणात् इदमवगम्यते यद् यो हि मानवसमाजो यदाऽध्यात्मिके जगति पुरस्सरायमाणो भवति तदैव तत्समाजे दर्शनशास्त्रालोचनाप्रारम्भो जायते। वैदिकधर्मावलम्बिमानवसमाजे यथा दर्शनशास्त्राणामाविर्भावपरम्परा दृश्यते तथाऽन्यत्र क्वापि मानवसमाजे न तादृशी तदुन्नतिरवलोक्यते। सनातनधर्मावलम्बिनो मुनिगणा योगसाधनपथेनैवान्तःकरणशुद्धिं सम्पादयन्तोऽन्तर्जगति प्रवेष्टुं कामयन्तेस्म। पूज्यपादा महर्षयः प्रथमं तपस्यया योगसाधन-बलेनैवान्तर्दृष्टिं समासाद्य जगत्कल्याण-कामनया सूत्राणि प्रणिनीय पृथक् पृथक् दर्शनशास्त्राणि विरचयामासुः। ते हि पूर्वमन्तर्जगति स्वाधिपत्यं संस्थाप्य पश्चाज्जिज्ञासुजनोपकृतयेऽपि तद्द्वारोद्घाटन-कामनया वैदिकदर्शनानि प्रणिनिन्युः। परन्तु पृथिवीस्थास्वितरासु शिक्षितजातिष्वेवंविधशक्तेरभावेन तादृशसम्भावनाया असत्त्वात्। तास्तु दूरत एवान्तर्जगतो यत्किञ्चिदाभासमात्रमासाद्य तत्रत्यवास्तविक-सत्यान्वेषणार्थं प्रयतितवत्यः।

यथाहि धरातलस्थाः सर्वा अप्यन्याः शिक्षित-जातयो बहिर्जगतः समाश्रयेण सूक्ष्मे जगति प्रवेश-मातन्वति न तथाऽस्माकं महर्षयोऽभ्यचर्यचरणा आचरन्ति। ते तु प्रथममेवान्तर्जगतोऽशेषविस्तीर्ण-ज्ञानं समासाद्य पश्चात् सर्वसाधारणजन-कल्याण-कृते बहिर्जगति प्रकाशयन्तीत्युक्तमेव पूर्वम्। इत्यत एव वैदिक-दर्शन-शास्त्राणि सप्तधा विभक्तानि सन्ति। पृथिवीस्थास्वितरासु जातिषु शिक्षितासु न तादृशानि दर्शनशास्त्राणि सन्ति, तत्र तु केवलं कौतूहलमयान्य-सम्पूर्णान्येव दर्शनशास्त्राणि कियन्ति विद्यन्ते।

सृष्टितत्त्वपर्यालोचनयाऽनायासमेवेदं विज्ञायते यत् त्रिगुणमय्याः प्रकृते राज्ये सर्वत्रैव त्रयो विभागाः समुपलभ्यन्ते। यथा—वातपित्तकफात्मिका हि शरीर-रक्षिका त्रिविधा शक्तिस्तथा दैव्यासुरी राक्षसी चेति मानवी त्रिधा प्रकृतिः, तथा जैवमैशं सहजं चेति त्रिविधं कर्मेत्यादि।

एवं हि सप्तभावावलम्बनेनापि सृष्टिराज्यस्य सप्त-धातवः, सप्तवर्णाः, सप्तदिवसाः, सप्तोर्ध्वलोकाः सप्ताधोलोकाः, सप्तरत्नानि, सप्तज्ञानभूमयः, इत्यादयः सप्तविधा विभागाः सर्वत्रैव स्थानेषु परिलक्ष्यन्ते। उक्तक्रमानुसारं सप्तापि ज्ञानभूमीरतिक्रम्य क्रमशः परमपदप्राप्तये येषां वैदिक-दर्शन-विज्ञानानामाविर्भावः, तान्यपि वैदिकदर्शनविज्ञानानि सप्तैव,—पदार्थवाददर्शने द्वे, सांख्यप्रवचन-दर्शने अपि द्वे स्तः, वेदमीमांसादर्शनानि च त्रीणि सन्ति। अद्यत्वे दर्शनानां या हि षट् संख्या ग्रन्थेषु लिखिताः

समुपलभ्यन्ते, तदङ्गेषु च षण्णामेव संख्यानां प्रवादोऽपि दृश्यते, तत्सर्वं जैनबौद्धानुकरणप्रचारफलमेव विज्ञेयम्। यतो हि तेषां दर्शनानि षट्संख्यकान्येवाभिधीयन्तेऽत्र। अतश्च नास्तिकदर्शन-संख्यानुकरणप्रवृत्तेयमास्तिक-दर्शनानां षट् संख्या। इत्यत एव क्वापि प्राचीनार्ष-ग्रन्थेषु षड्दर्शनशब्दोपलब्धिर्न दृश्यते। विशेषतो भूयस्याः शताब्द्या मीमांसादर्शनस्य सिद्धान्तग्रन्थ-विलोपेन मध्यमीमांसादर्शनस्य कोऽपि महान् सिद्धान्त-ग्रन्थो नोपलब्ध आसीदिति। एवम्भूतानामेवाज्ञान-मूलककारणकलापानां प्रभावादस्माकं साहित्येष्वप्य-ज्ञानमूलकः षड्दर्शनशब्दप्रचारः क्रमशः परिलक्ष्यते। वस्तुतस्तु न्यायदर्शनवैशेषिकदर्शनमिति द्वे पदार्थ-वाददर्शने। योगसांख्यदर्शने च सांख्यप्रवचनशब्द-वाच्ये द्वे दर्शने। वेदानां कर्मोपासनाज्ञानकाण्डत्रया-नुसारं कर्मोपासनाज्ञानदर्शनानि—कर्ममीमांसादर्शनं, दैवीमीमांसापरपर्यायं मध्यमीमांसा-(भक्तिमीमांसा)-दर्शनं, वेदान्तापरपर्यायम् उत्तरमीमांसादर्शनमित्येवं त्रीणि दर्शनानीति सप्तैवास्तिकदर्शनानि संख्यागण-नायां स्वतःसिद्धानि भवन्ति। दर्शन-ग्रन्थानामभावेन दार्शनिकशिक्षाया विलोपेन च सनातनधर्मस्यार्थं विप्लवो विलोक्यते। अतएव हि स्वधर्मेऽविश्वासः, परधर्मग्रहणेच्छा, सदाचार-विवर्जनम्, पूज्यपादानां महर्षिवर्गाणामादेशोपहासकरणम्, वेदपुराणादिष्व-श्रद्धा, साम्प्रदायिकश्च परस्परविरोध, एवमलौकिकेष्व-न्तर्जगत्स्वविश्वासः, परलोकभयत्यागः, देवर्षिपितृ-लोकास्तित्वे सन्देहः, कर्मकाण्डेऽनास्था, साधुब्राह्मणा-तिथिषु भक्तिशून्यत्वम्, वर्णाश्रमधर्मोपेक्षा, जगत्पावन-कर्त्रीणामार्यनारीणां सतीत्वधर्मस्य मूलोच्छेदे प्रवृत्तिः, जपध्यानादिसाधनमार्गेष्वरुचिरित्यादयो दोषा आर्यत्व-भावविलोपकाः प्राबल्येन प्रवर्द्धमाना दृश्यन्ते। ते सर्वेऽपि वैदिकदर्शनानां शिक्षाप्रचाराभावमूलका एवेति नास्ति सन्देहलेशोऽप्यत्र विमर्शे। न्यायदर्शनस्यापि सम्प्रति नास्ति शिक्षा समग्रा। यतो हि प्राचीनन्याय-शिक्षा तु सम्प्रति विलीनैव, तत्स्थाने केवलं नव्यन्या-यानामेव प्राबल्यं परिलक्ष्यते। वैशेषिकदर्शनोपयोगिन आर्षभाष्यस्याभावेन तस्य तु चर्चैव सम्प्रति विलीना दृश्यते, योगदर्शनन्तु प्रथमतः कठिनशास्त्रं विद्यतेऽन्य-तश्च तेन सार्द्धमन्तर्जगतः सम्बन्धोऽतितिरोहितो वर्तते। तस्य सम्यगध्ययनाध्यापनप्रथा सर्वथा विलुप्ता विद्यते। यतो हि तस्याध्यापयितुराचार्यस्य योगित्वमावश्यकम्। इदानीञ्चैवम्भूतस्य वास्तविकयोगिनोऽभावेन तस्य दर्शनस्य यथार्थशिक्षाऽभाव एवास्ति। सांख्यदर्शनस्या-प्यत्यन्तशोच्या दशा विद्यते। अतएव केऽपि तद्दर्शन-मर्वाचीनं निगदन्ति। केऽपि तु प्रक्षिप्तविषयान्वितमिति गर्हयन्ति। केचन हि नास्तिकदर्शनं तदित्युपहसन्ति। कतिशः सहस्रवर्षतो हि तदीयार्षभाष्याभावेन सम्प्रति समुपलब्धभाष्यस्य चान्यधर्मावलम्ब्याचार्यप्रणीतत्वेनै-वैतादृशी विशृङ्खलता जाताऽस्य दर्शनस्येति निश्चप्रचम्।

तैरन्यधर्मावलम्बिभिराचार्यैर्लौकिकालौकिकप्रत्य-क्षलक्षणप्रवर्तनक्रमेणेश्वर-विषयोपेक्षा कृता दृश्यते, यस्याध्ययनतो निरपेक्षमध्यस्थ-दार्शनिकपुरुषस्य स्फुट-मेव भानं जायते यदेष हि आचार्यः सनातनधर्म-विरुद्धः कश्चनान्यः साम्प्रदायिक आचार्य आसीदिति। अद्यावधि यानि सांख्यदर्शनोपरि ग्रन्थजातानि निर्मि-तानि, तानि सर्वाण्यपि तत्तदाचार्यप्रवरमतानुसरणव एवोपनिबद्धानि। दर्शनशास्त्रस्य यथार्थप्रचाराय प्राचीन-न्यायदर्शनस्य आर्षभाष्यसम्वलितस्य च वैशेषिक-दर्शनस्य विशेषतः प्रचार आवश्यकः। श्रीमतो भगवतो व्यासस्य भाष्याश्रयेण योगिप्रवरैर्महापुरुषैः प्रणीतेन विस्तृतभाष्येण सह योगदर्शनस्यापि प्रचार आवश्यकः। सांख्यदर्शनस्यापि भाष्यं पूज्यपादसूत्रकारमतानुसारं तत्त्वज्ञानभिमेहामहिमशालिभिर्विद्वद्भिर्नूतनपद्धत्या वि-रचय्यावश्यं सम्प्रति प्रचारणीयम्। तत्र सर्वमिदं पूज्यचरणश्रीज्ञानानन्दस्वामिवर्यचरणसरसीरुह-कृपा-बलेन प्रकाशयितुमितः प्रबलः प्रयत्नो विधीयते।

वेदानां तिसृषु मीमांसापद्धतिषु तदीयदर्शनेषु च महान् विप्लवो दृश्यते। पूज्यपादमहर्षिजैमिनिकृत-कर्ममीमांसादर्शनस्यातिविस्तारेऽपि तस्यासम्पूर्णत्वादेक-देशित्वाच्च केवलवैदिककर्मकाण्डमात्रस्यैव विस्तरशो विवेचकत्वाच्च सम्प्रति वैदिकयज्ञविधानानुपयुक्तेऽ

स्मिन्काले विशिष्टोपकारकत्वाभावाच नाधुनोपयुक्तं फलं दृश्यते।

को धर्मः? साधारणविशेषधर्मयोः को भेदः? को वर्णधर्मः? क आश्रमधर्मः? पुरुषधर्मः कः? नारीधर्मश्च कः? किं जन्मान्तरवादविज्ञानम्? परलोकगतिः कीदृशी? किं संसाररहस्यम्। किं षोडशसंस्कारविज्ञानम्, संस्कारशुद्धया कथं क्रियाशुद्धिर्जायते? उद्भिज्जादियोनितो मनुष्ययोनौ कथं जीवः क्रमशः प्रविशति? पुण्यकर्म कृत्वा कथं मानवोऽभ्युदयं निःश्रेयसञ्च विन्दति? कियन्तः कर्मभेदाः? क्रियाशुद्धया च कथं मानवो मुक्तो भवतीत्यादयः कर्ममीमांसाप्रतिपाद्या विषयाः सन्ति। ईदृशं हि कर्ममीमांसादर्शनं बहुकालतो विलुप्तं विद्यतेस्म। सम्प्रति श्री-भारतधर्ममहामण्डलसञ्चालकश्रीचरणप्रसादेन त्वेकं विस्तृतं सूत्रग्रन्थरत्नं सम्प्राप्तम्। यस्य विस्तृतं संस्कृतभाष्यं हिन्दीभाष्यञ्च तन्महानुभावकृपयैव सम्पादितं विद्यते। कर्ममीमांसादर्शनस्य लोपेऽपि तद्विषयकस्यैकस्य वृहद्ग्रन्थस्योपलब्धिरासीदेव। दैवीमीमांसादर्शनस्य (मध्यमीमांसाऽपरपर्यायस्य भक्तिमीमांसादर्शनस्य) तु कोऽप्येकोऽपि ग्रन्थो नोपलभ्यतेस्म। सम्प्रति तस्यापि सिद्धान्तस्वरूप एकः सूत्रग्रन्थः श्रीचरणप्रसादादेव समुपलब्धः। तस्य संस्कृतभाष्यं प्रकाशितं विद्यते। को भक्तिपदार्थः? तस्यां भक्तेः कियन्तो भेदा भवन्ति? कथं हि समुपासनया मुक्तिः समुपलभ्यते? भगवत आनन्दमयं स्वरूपं किम्? को हि भगवतो ब्रह्मेशविराट्स्वरूपेषु परस्परं भेदः? भक्तेः प्रधानाचार्याणां महर्षिवर्याणां किं स्वतन्त्रं मतम्? किञ्च सृष्टितत्वस्य विस्तृतं रहस्यम्? का ह्याध्यात्मसृष्टिः? का चाधिदैवसृष्टिः? का चाधिभौतसृष्टिः? को हि ऋषिर्गीयते? देवदेवीशब्दार्थश्च कः? के पितरः? कश्च तैः सह मानवसम्बन्धः? कथमवतारो भवति? कियन्तोऽवताराः? कानि चत्वारि योगलक्षणानि? कियन्तो ह्युपासनाभेदाः? कथं हि साधक उपासनाभक्तिसमाश्रयेण मुक्तिप्राप्तौ समर्थो जायते? किं हि कर्ममीमांसायाश्चरमं लक्ष्यं? किञ्च दैवीमीमांसायाश्चरमं लक्ष्यम्? ब्रह्ममीमांसादर्शनस्य च किमन्तिमं लक्ष्यमित्यादिविषया दर्शनेऽस्मिन् वर्णिताः सन्ति। एतस्यैव दर्शनस्य विलोपेन योगोपासनयोरैक्यसंसाधनविषये समुन्नता ज्ञानिनोऽपि विमुह्यन्तिस्म।

सप्तमज्ञानभूमेरन्तिमं दर्शनं ब्रह्ममीमांसाख्यमस्ति, यस्य वेदान्तमिति द्वितीयं नाम। तस्यात्युत्तमं भाष्यं श्रीमदादिशङ्कराचार्यप्रणीतं समुपलभ्यते। अद्यावधि दैवीमीमांसादर्शनस्य विलुप्तावस्थापन्नत्वाद् उपासकसम्प्रदायानाञ्चाद्वैतवादस्य द्वैतवादे समवतारणार्थं कृतप्रयत्नतया वेदान्तविचारेऽनेकधाऽसुविधाः सञ्जाता अभूवन्। यदीयं मध्यमीमांसा मध्यकालेविलुप्ता नाभविष्यत्तदा द्वैताद्वैतवादयोः परस्परविरोधो न समुदैष्यतेति।

## ईश्वरो जीवः प्रकृतिश्च।

सच्चिदानन्दमयमनाद्यनन्तं ब्रह्म सदैवैकरूपं ज्ञानमयं निष्क्रियं सृष्ट्यतीतं निगद्यते। न तत् काऽपि क्रिया स्पृशति। न तत्र कस्यापि क्लेशस्य सम्भावनाऽस्ति। भूतभविष्यद्वर्तमानकालेऽपि तत् सदैवैकरूपमेव तिष्ठति। तस्यैवेच्छानिच्छारूपेच्छया तदीयेच्छाशक्तिद्वारेदं जगत् समुत्पद्यते, तिष्ठति, तस्मिन्नेव विलीयते।

सृष्टिसमुत्पत्तिस्थितिदशायां सर्वशक्तिमान् परमात्मा येनांशेन येन भावेन वा सृष्टिं सञ्चालयति, तत्सृष्टिसञ्चालनैश्वर्यप्रभावादेवेश्वर इति संज्ञां स लभते। सृष्टिशून्यदशायामथवा सृष्टेर्विलेपे सञ्जाते निष्क्रियप्रशान्तावस्थायां स हि ब्रह्मेति संज्ञां लभते। 'अहं ममेतिवत्, शक्तिशक्तिमतोरभेदवत् ब्रह्मणि त्रिगुणात्मिकायां तच्छक्तौ मायायामन्योऽन्यमभेद एव ब्रह्मर्षिभिः प्रमाणितो विद्यते। समासत इदमवसेयमत्र यन्निर्गुणनिष्क्रियब्रह्मभावे तच्छक्तिर्विलीना साम्यावस्थापन्ना तिष्ठति। ईश्वरभावे सगुणब्रह्मावस्थायान्तु सैव ब्रह्मशक्तिः स्वीय-गुणत्रयात्मकस्वरूपमुपादाय प्रकाशत इति तस्य सर्वशक्तेर्लीलामयवपुषो भगवतो लीलामयी या हि शक्तिः संसारमुद्भावयति, सा हि सर्वशक्तिमयीच्छारूपिणी महाशक्तिरेव

महाविद्या, प्रकृतिः, मायेत्यादि-नाम्नाऽभिधीयते वेदशास्त्रादिषु। यदा हि सृष्टिक्रिया प्रारभ्यते, निष्क्रियरूपशान्तावस्थायां यदा क्रियारूपा सृष्टिरुज्जृम्भते, तदैवेदम् विमर्शनीयं विद्यते यत् यत्र क्रियारूपकम्पनं जातं, यतश्च कारणरूपशक्तेस्तत् कम्पनमुदपन्नम्, तयोर्द्वयोरेव स्वतन्त्र-सत्तया संज्ञाद्वयं जातम्। एकस्तु सृष्टिकर्त्ता, यस्येच्छया सृष्टिरूपा क्रिया प्रक्रान्ता सहीश्वर उच्यते। द्वितीया तदिच्छारूपा शक्तिर्हि प्रकृतिरभिधीयते : यथा च समुद्रे तरङ्गोत्थित्या समुद्रतरङ्गयोःस्वतन्त्रतया सत्ताद्वयमुपजायते, तथैवेश्वररूपसमुद्रस्य तरङ्गस्थानीयस्य च जीवस्य भिन्नस्थितिकं सत्ताद्वयं प्रकान्तम्। तत्र प्रशान्तगम्भीरे समुद्रस्थानीये परमेश्वरे तु न कोऽपि भेदः समजनि, परन्तु अविद्यावशतः प्रत्येकतरङ्गस्थानीयेन जीवेन नानाभेदवादोऽङ्गीकृतः। अविद्यावशेन जीवोऽहङ्कारवृत्त्याक्रान्तः स्वीयस्वतन्त्रसत्तया स्वतन्त्र-केन्द्रकल्पनामकरोत्, तदेवाज्ञानकल्पितं स्वतन्त्रं केन्द्रमेव जीवस्य जीवत्वं विज्ञेयम्। सर्वशक्तिमतः परमेश्वरस्य वशवर्तिनी विद्यारूपिणी महाशक्तिर्महामाया हि तदधीनैव सती सृष्टिस्थितिलयक्रिया विदधाति। परन्तु जीवावस्थायान्तु तद्विपरीतं सञ्जातम्। जीवमोहिकाया अविद्याया एव प्रभावो जीवोपरि सञ्जातः। जीवरूपं हि चैतन्यमविद्यावशगं सत् सृष्टिक्रियायामाबद्धं जातम्। तदा हि तच्चैतन्यं स्वात्मानं प्रकृतिवन्मन्यमानं त्रिगुणात्मिकायाः सत्त्वरजस्तमोमय्याः प्रकृतेरनुरूपं स्वस्वरूपमपि त्रिगुणात्मकमेवाबद्धं मन्यते। जीवसम्बन्धिनोऽस्य बन्धनस्य निदानमनाद्यविद्यैव विद्यते। तद्वशमापतित एव जीवोऽल्पज्ञो भूत्वाऽहङ्काराच्छन्नो निजस्वतन्त्रसत्तां यत्स्वीचकार, सैवावस्था जीवशब्दवाच्या भवति। इयानेव जीवेश्वरयोर्भेदो विद्यते, यदविद्याऽक्रान्तो हि जीवो भवति सर्वथा तामधीनीकृत्य स्ववशे संस्थापयितेश्वरः कथ्यते। फलतः प्रकृतेरधीनो जीवः, तां स्ववशे संस्थापयिता परमेश्वर उच्यते।

सृष्टेरारम्भकाले सर्वशक्तिमान् परमेश्वरः यदा विद्यारूपिण्या स्वमहाशक्त्याऽस्य ब्रह्माण्डस्य सृष्टिमारब्धवान् तदा सर्वप्रथमं तत आकाशः सञ्जातः। आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी प्रादुर्भवति इमान्येव पञ्चतत्त्वानि कथ्यन्ते। पञ्चीकरणप्रक्रियया एभ्य एव सर्वस्यापि विश्वस्य समुत्पत्तिरजायत। प्रकृतिस्त्रिगुणात्मिकाऽस्ति। प्रकृतेरादिकारणरूपायास्तत एव त्विमानि जायन्त इतीमान्यपि त्रिगुणात्मकान्येवोत्पद्यन्ते। एषां पञ्चानां तत्त्वानां संघातस्य सत्त्वांशतोऽन्तःकरणं रजोंऽशतः पञ्चप्राणा जायन्ते। अन्तःकरणे समष्टिरूपेण चित्तं मनोबुद्धिरहङ्कारश्चेति चत्वारि तत्त्वानि सन्ति। चित्ताहङ्कारौ मनोबुद्ध्योरन्तर्विभागौ कथ्येते, तत्र चित्तं मनसोऽहङ्कारश्च बुद्धेरिति विवेकः। फलतो मनोबुद्धिचित्ताहङ्काराणामैक्यमेवान्तःकरणमुच्यते। इत्यत एव योगदर्शनं चित्ताख्यस्यान्तःकरणस्य मनोबुद्ध्यहङ्काराख्य एव विभागाः सन्तीति स्वीकरोति। एषु पञ्चभूतेषु प्रत्येकं गुण एव तन्मात्राशब्द भाग् भवति। तथाहि आकाशस्य शब्दः, वायोः स्पर्शः, अग्ने रूपं, जलस्य रसः, पृथिव्या गन्ध इत्येत एव पञ्चभूतगुणाः पञ्चतन्मात्राः कथ्यन्ते। एतेषामेव पञ्चभूतानां सात्त्विकांशतः सृष्टेः साहाय्यकर्तॄणि पञ्चज्ञानेन्द्रियाणि जायन्ते। तथाहि आकाशस्य सात्त्विकांशतः श्रोत्रम्, वायोस्त्वक्, तेजसश्चक्षुः, अपांरसना, पृथिव्या घ्राणमिति पञ्चज्ञानेन्द्रियाणि कथ्यन्ते। प्रत्येकतत्त्वस्य सत्त्वांशतो ज्ञानेन्द्रयाणि जातानीत्युक्तम्भवति। एवमेवैषां पञ्चानां तत्त्वानां रजोंऽशतः स्वातन्त्र्येण पञ्चकर्मेन्द्रियाणि जातानि, तथाहि आकाशस्य रजोंऽशतो वाक्, वायोरजोंऽशतः पाणी, तेजसो रजोंशतः पादौ, जलस्य रजोंऽशत उपस्थेन्द्रियम्, पृथिव्या रजोंऽशतः पायिविन्द्रियम्। इत्येतान्येव पञ्च कर्मेन्द्रियाणि कथ्यन्ते। तेषां पञ्चमहाभूतानां विस्तारेण सृष्टिविस्तारः समजनि। यदेमानि भूतानि पृथक् पृथक् सूक्ष्मावस्थायां तिष्ठन्ति तदेमान्येवागोचरीभूतान्युच्यन्ते, यदेमानि परस्परं सम्मिलितानि स्थूलतामासादयन्ति तदा दृष्टिगोचरतामासाद्य पञ्चीकृतमहा-

भूतानीत्युच्यन्ते । पञ्चीकरणप्रकारोऽयमस्ति यत्पञ्चानामपि भूतानां कलाषोडशकं कल्पयित्वा, तत्रैकस्य भूतस्यार्द्धमष्टकलात्मकमंशं गृहीत्वा तदन्येषां चतुर्णां प्रत्येकस्य कलाद्वयमेलनेनाष्टकलात्मकमर्द्धमंशं गृहीत्वा पूर्णन्तद्भूतं जायत इति । इत्थमेवान्येषामपि ज्ञेयम् । वेदास्तत्सम्मतानि सर्वाण्येव शास्त्राणि चैकमत्येनेदमेव प्रतिपादयन्ति यत् ब्रह्मपरमेश्वरः पुरुषापरपर्यायः त्रिगुणात्मिका माया प्रकृत्यपरपर्याया चेत्यनयोरेवोभयोरिच्छया संयोगेन सृष्टिरारभ्यते । शास्त्राणि पृथक्प्रस्थानानि सन्तु नाम, परन्तु सर्वेषामाशयस्तु साम्यमेव बिभर्ति । सर्वाण्येव तु तं परमेश्वरं सर्वशक्तिमन्तं पूर्णब्रह्मस्वरूपं पुरुषं निष्क्रियं स्वतन्त्रमामनन्ति त्रिगुणात्मिकां प्रकृतिं सृष्टिकर्त्रीं प्रतिपादयन्ति ।

सांख्यदर्शनं हि सृष्टि-कारणरूपां प्रकृतिं चतुर्विंशति रूपतो वर्णयति । तामेव तु वेदान्तदर्शनं पञ्चकोशरूपतः स्तौति । सांख्यदर्शनं यथा हि चतुर्विंशतितत्त्वत उपराममेव कैवल्यमाख्याति तथैव वेदान्तदर्शनमपि पञ्चकोशतः पृथग्भावदशामेव ब्रह्मसद्भावरूपं मोक्षपदमभिदधाति । सर्वेषामकमेवाभिधानम् एकमेव लक्ष्यमस्ति । केवलं साधनमार्गे मुक्तिपदप्राप्तिप्रकारोपायमात्रभेदस्तैस्तैः शास्त्रैः पार्थक्येन स्वातन्त्र्यदिशा समुपदिश्यते ।

प्रथमं यदा जीवरूपं चैतन्यमविद्यासंबद्धं सदात्मानं प्रकृतितुल्यं मेने तदेव तु चिज्जडमेलनं कारणशरीरं सञ्जातम् । ततश्चान्तःकरणम्, पञ्चप्राणैस्सहितानि पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि च मिलित्वा सूक्ष्मशरीरमित्युच्यते । पञ्चीकृतानि सूक्ष्मपञ्चतत्त्वात्मकानि पञ्चतन्मात्रोत्पन्नानि पञ्चमहाभूतानि पृथिव्यप्तेजोवाय्वाकाशनामानि यानि स्थूलपञ्चतत्त्वानि समाम्नायन्ते तैरेव स्थूलशरीरमुत्पद्यते । इदञ्च स्थूलशरीमिहैव देहपातानन्तरं विशीर्ण जायते । सूक्ष्मशरीरविशिष्ट एव जीवो जन्मान्तरमुपसर्पति । स्थूलं शरीरं हि सूक्ष्मशरीरस्यैव विस्तारः समाम्नायते । जीवो हि यत् किञ्चित्कर्म करोति यत्किमपि च कर्मफलं भुङ्क्ते यानि च कर्मफलानि भविष्यत्काले भोक्तुं योग्यानि, तत्संस्कारं सञ्चिनोति, तत्सर्वमपि सूक्ष्मशरीरद्वारेणान्तःकरण एव सम्भृतं करोति । यावत् अविद्या स्थितिर्विद्यते तावद्धि जीवरूपं चैतन्यम् आत्मानं अन्तःकरणावच्छिन्नं स्वीकरोति । यावच्च तस्यान्तःकरणात्मता तिष्ठति तावत् तस्य तत्रासक्तिरपि स्थास्यत्येव । यावच्च तस्य भ्रममूलिकेयं तत्रासक्तिः स्थास्यति तावन्नानादुःखसुखात्मककर्मकलापासक्तो जीवो गमनागमनचक्रे सम्भ्रम्यमाणोऽवश्यं संसारगतिं लप्स्यत इति ।

## योगशास्त्रसिद्धान्तः ।

योगशब्दार्थो हि संयोगोऽस्ति । जीवरूपं हि चैतन्यमविद्यासंसक्तं सत् परमात्मनो ब्रह्मणः सकाशात्पृथग्भावमासाद्य तिष्ठति । तस्य तत्पार्थक्यं दूरीकृत्य तदीयपूर्वरूपं प्रापय्य तदुद्भवस्थाने पुनः प्रापणमेव योग इत्याम्नायते । योगदर्शनमपि "योगश्चित्तवृत्तिनिरोधः" "तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति स्वीकृत्य रूपान्तरेण तदेवैक्यं समर्थयति, फलत जीवात्मनः परमात्मसङ्गम एव योगोऽस्ति । इत्येवं जीवानां मुक्तिपथे प्रापणाय वेदेषु शास्त्रेषु च यावन्त उपाया विहिताः सन्ति ते सर्वेऽपि चातुर्विध्यमेव भजन्ते । तथाहि मन्त्र-हठ-लय-राजयोगा इति ।

नास्तिकाज्ञान-भूमित्रयमतिक्रम्य आस्तिकानुमानसम्बन्धिन्यो ज्ञानदा-संन्यासदानाम्न्योर्द्वयोः पदार्थवादभूम्योरधिकारप्राप्तिर्भवति । तदनन्तरम् ईश्वरसाक्षात्कारं कारयन्त्या अस्या योगदानामिकायास्तृतीयस्या भूमेरुदयो जायते । तदोन्नतज्ञानाधिकारिणो जिज्ञासोर्बुद्धिर्यत् कार्यं वीक्ष्य तत्कर्तुरनुमानं 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवत्' इत्याकारकं कर्तुं प्रभवति स्म, सैवाधुनेश्वरं साक्षात्प्रत्यक्षं कर्तुमर्हति । तदनतरम् जिज्ञासुरस्मिन्नन्तःकरणसन्धौ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति योगसूत्रोक्ता अष्टावपि सोपानपंक्तीर्यथाक्रमं सुकौशलपूर्णक्रियाभिरारोहन्नन्तःकरणवृत्तीर्निरोद्धुं क्रमिकां शक्तिं समासादयति । अन्तःकरणमेव जगन्माध्यमं

निगद्यते। तस्य समाहितत्वं विधातुं तत्समाधिस्थं कर्तुं वा पूज्यपादैर्महर्षिभिरनेकविधाः साधनरीतयः प्रदर्शिताः। तासामेव साधनपद्धतीनां सिद्धान्ता इह तृतीयज्ञानभूमिद्योगदर्शने संक्षेपतः श्रीपूज्यपादेन महर्षिणा पतञ्जलिना समुपदिष्टाः सन्ति। योगदानाम्न्यां ज्ञानभूमौ सुकौशलपूर्णसाधनद्वाराऽन्तःकरणेऽलौकिकशक्तिसमुदयो भवति तदैव लौकिकप्रत्यक्षाधिकारतोऽग्रे प्रवर्धमानः साधकोऽलौकिकं प्रत्यक्षं कर्तुं समर्थो जायते। उन्नतावस्थामधिगतो ज्ञानी साधकस्तदा श्रीपरमेशानुकम्पया सुप्तोत्थितःपुमानिवास्यां ज्ञानभूमौ समुपेत्य स्वान्तःकरणेऽद्भुतां लोकातीतामवस्थामनुभवति। तथाऽलौकिकप्रत्यक्षसाहाय्येनैतादृशानां विषयाणां दर्शने समर्थो भवति, यत्रान्येषां कृतेऽसम्भवः पन्थाः।

यथाहि वायुना तरङ्गायमाणे जलाशये मानवश्चन्द्रं तत्र प्रतिबिम्बितं न स्पष्टं द्रष्टुमर्हति। प्रत्युत तत्र चन्द्रमसि तरङ्गभेदेनानन्तानि ज्योतींषि दृष्टिपथमारोहन्ति, तथैव यदा हि मानवान्तःकरणं त्रिगुणतरङ्गभेदैरालोडितं तिष्ठति, तदा तद्वृत्तिसारूप्यमासाद्यानन्तभेदभाग् भवति. यदाचास्यां योगदानमिकायां योगभूमौ साधकान्तःकरणं समुपतिष्ठते तदा तादृशं तदतिसुस्थिरं जायते, यथा तत्र तदीयात्मस्वरूपं दृष्टिगोचरीभवति एतदेवस्या ज्ञानभूमेर्वैशिष्ट्यमवसेयम्।

सर्वासामुपनिषदां सर्वेषां दर्शनानामयमेव सैद्धान्तिको निष्कर्षो निःसरति, यन्मनोबुद्धिचित्ताहङ्कारात्मकचतुर्विभागविभक्तमन्तः करणं विश्वमाध्यममुच्यते। जडचेतनात्मकेऽस्मिन् सर्वस्मिन्नेव विश्वस्मिन्नन्तःकरणं सर्वत्रैव व्यापकमस्तीति। उद्भिज्जादिस्वेदज,एडाजपिण्डजान्तेषु चतुर्विवधभूतसङ्घेषु तच्चालकेषु च विभिन्नदेवसंङ्घेषु तथैव जडजगच्चालकेषु च देवसङ्घेषु मानवपिण्डेषु देवपिण्डेषु च समानमेवान्तःकरणं व्याप्नुवत्कार्यकृद् विद्यत इति तस्य व्यापकत्वं स्वतः सिद्ध्यति। योगदर्शनं हि सिद्धान्तमिमं प्रत्यक्षरूपतः पुरत उपस्थापयति. तथाहि, कथमन्तःकरणं समाहितं क्रियते, कथं च योगसाधनद्वाराऽन्तःकरणे तत्त्वस्यैकस्योदयः क्रियते, कथं चैकस्मिन् स्थाने धारणाध्यानसमाधिप्रयोगेणालौकिकं कार्यं कर्तुं पार्यते, कथं वा तयैव संयमक्रियया योगिराड् निजान्तःकरणं चतुर्दशस्वपि भुवनेषु प्रापयितुं समर्थो जायते, कथं वा स एव योगिवर्य्यः सिद्धिं समधिगत्यालौकिकप्रत्यक्षकरणे समर्थो भवति। इत्येतादृशानां लोकातीत-विषयजातानां सिद्धयो योगदानम्निकायां ज्ञानभूमौ समासाद्यन्ते। अनुमितिमात्रसाहाय्यबलेन कार्यकर्योरधस्तनज्ञानभूम्योरिह लोपो जायते। तदानीमिहैव योगदाभूमौ साधकश्चित्तवृत्तिनिरोधतः स्वात्मपरमात्मस्वरूपदर्शने समर्थो जायते।

ईदृशस्य विश्वमाध्यमस्वरूपस्य सर्वव्यापकस्य चान्तःकरणस्य ज्ञानं कर्तुं तदीयावस्थानां तदीयवृत्तीनां च दृशाज्ञानमत्यावश्यकं विद्यते। तत्रान्तःकरणस्य चतुर्षु विभागेषु विभागद्वयं प्रधानम्, विभागद्वयं चाप्रधाममभिधीयते। इन्द्रियराजस्य मनसोऽन्वविभाग एव चित्तमुच्यते। तत्रैव चित्ते नानाविधाः संस्कारा अङ्किता जायन्ते। स्मृतिशक्तिरप्यस्यैव चित्तस्य विभाग एकोऽभिधीयते। मनो हि संकल्पविकल्पात्मकमुच्यते। सदसद्विचारशून्यमतिचंचलमेतद् गण्यते। उक्तं चार्जुनेन भगवन्तं श्रीकृष्णं प्रति प्रश्नमुखेन श्रीमद्भगवद्गीतोपनिषदि—

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद् दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्। इति।

तस्य च मनसोगुरुर्बुद्धिरुच्यते। या हि निश्चयात्मिकेत्यभिहिता योगिभिः, यस्या अन्तर्विभागोऽहङ्कारोऽस्ति। शास्त्रेषु बुद्धेरधिकारविस्तृतिः सीमातिगा विद्यते। बुद्धिरेव ज्ञानिभक्तस्यान्तः करणं श्रीमद्भगवच्चरणावधिं प्रापयितुं समर्था भवति। जीवानां जीवत्वनिदानमहङ्कारः प्रथमावस्थात समारभ्य जीवानां जीवत्वसंरक्षणकर्तृत्वहेतुना साधकस्य मुक्तिभूमिप्राप्तिं यावत् सहैव तिष्ठति। इत्यत एव हेतोस्तत्त्वदर्शिनो महात्मानः कर्माधिकाराणां विश्लेषणानुसारं तस्य शारीरिक-वाचनिक-मानसिक-बौद्धिकाँश्चतुरो भेदान् मन्यन्ते।

तत्र प्राधान्येन शरीरेण क्रियमाणं कर्म शारीर-

मित्युच्यते। वाचा विधीयमानं वाचनिकं, प्रधानतया मनसा विधीयमानं मानसिकं तथा प्रधानतया बुद्धितत्त्वसाहाय्येन क्रियमाणं बौद्धिकमुच्यते, इत्यत एव सर्वोन्नतरःजयोगात्मकं साधनं बुद्धिसाहाय्येनैव मनोवशीकृत्य साध्यते। अतश्च बुद्धेरधिकारः सर्वोपरि जेगीयते। भगवता श्रीकृष्णेनापि "यो बुद्धेः परतस्तु सः" इत्यभिहितम्।

अन्तःकरणवृत्तयो हि सामान्यतश्चतुर्विधाः सन्ति। मनःप्रधानाः स्मृत्यपरपर्यायचित्तप्रधाना अहङ्कारप्रधाना बुद्धिप्रधानास्ताः कथ्यन्ते। इमाश्चतस्रोऽपि वृत्तयोऽनन्ता भवन्ति। याश्च योगशास्त्रे क्लिष्टाक्लिष्टेति श्रेणिद्वयेऽन्तर्भाव्यन्ते। याभिर्वृत्तिभिरात्मन आवरणवृद्धिर्भवति ता क्लिष्टा इत्युच्यन्ते, याभिश्चात्मावरणमपाक्रियते ता एवाक्लिष्टा इत्युच्यन्ते। इमे द्विविधे अपि वृत्ती अनन्ततामेवाश्रयतः। यतो हि गुणतरङ्गैर्भावतरङ्गैश्च परम्परघातप्रतिघातविधया वृत्तीनामियत्यः संख्या अगणिता जायन्ते, यासां संकलनाऽसंभव एव भवति। इत्थं सति वृत्तिविस्तारानन्त्येऽन्तःकरणस्य समाधानं दुष्करतामेवाश्रयति।

अयं लोको वा स्यात्परलोको वा स्यान्नरभूमिर्वा स्याद्देवभूमिर्वा, स्यात्सर्वमेव हि त्रिगुणपरिवर्तनहेतोः क्षणभङ्गुरमस्तीति विज्ञाय यदा साधकस्यान्तःकरणमैहिकं स्वर्गादि पारलौकिकञ्च सर्वविधं सुखमनित्यं मिथ्या वा परिभाव्य ततः परिवर्तितमुखं जायते, तदा सैव विषयविरागावस्था वैराग्यमित्युच्यते। अस्य वैराग्यस्य चत्वारो भेदाः शास्त्रकृद्भिर्निरूपिताः। यदा हि विवेकात्मक-सात्त्विकबुद्ध्युदयतः साधको विचारयति, यदिदं जगद् मायाक्रीडास्थलं मिथ्येत्यतोऽधुना मुक्तो भूत्वा मुक्तिपथाभिमुखो भवितुमुचितमिति सैव वैराग्यस्य प्रथमावस्थोच्यते। यदा हि विवेकी साधको विषयस्य क्षणभङ्गुरतां तद्दोषांश्च विभाव्य निश्चयेनैव तद्विषयभोगादात्मानं पृथक् संस्थापयितुमिच्छति चेत्सैव वैराग्यस्य द्वितीयावस्थोच्यते। यदा चैतस्यां वैराग्यबुद्धौ दृढायां जातायां साधकान्तःकरणं जागतिकान् सर्वानेव पदार्थान् दुःखमयानवगच्छति, यथा जीवस्य हठाद् विषपाने कार्यमाणे घोरतरः क्लेशो जायते, तथैव यदा साधकस्यान्तःकरणे सर्वमेव सुखं विषतुल्यं भासते तदा सैवोन्नतदशा वैराग्यस्य तृतीयावस्थोच्यते। अस्यामप्यवस्थायां विषयस्य स्थूले रागे सर्वथा विलीनेऽपि तदीयो मानसिकसंसारोऽधुनाप्यवशिष्यत एव। चतुर्थी दशा तु ततोऽप्यग्रे विद्यते। यदा हि साधकस्य वैराग्यसाधनतो वस्तुतः पूर्णतोपलब्धौ सत्यां तदीयान्तःकरणमेकपदे एव संसारतो वैमुख्यमासाद्योपरतं स्यादिति सैव सर्वश्रेष्ठा वैराग्यस्य चतुर्थ्यवस्था निगद्यते। यतो हि परवैराग्योदयेनान्तःकरणं पूर्णतो वासनाशून्यं प्रजायते, तदा संसाराभिमुखं निरीक्षत एव नहि। योगपथेऽग्रेसरतां महात्मनामेव नानाविधा दिव्या ऐशसिद्धयः समुपस्थिता जायन्ते। यासां बलेन योगिनो यदेवाभिलषन्ति तदेव कर्तुम्पारयन्ति। शक्तिरियं परवैराग्यस्यैव विद्यते, यतः साधको सिद्धिरूपे विषये न पुनरासक्तो जायत इति। अतश्च वैराग्यीयपूर्णावस्थारूपस्य परवैराग्यस्य साधनपूर्णावस्थारूपस्यान्तःकरणनिरोधस्य चेत्युभयोरप्येकमेव लक्षणं विज्ञेयम्। इत्थञ्च क्लिष्टात्मकपापजनकवृत्तीनां शनैः शनैः अक्लिष्टात्मकपुण्यजनक-वृत्तिभिरभिभवीकरणं समुचितम्। पुनश्च वैराग्याभ्यासेनाक्लिष्टवृत्तीनामपि निरोधेन वासनाशून्यस्थित्यैव मुक्तिपदप्राप्तिर्जायते।

योगशास्त्रेण साधनस्य वैराग्योपेतपुरुषार्थस्य चाष्टौ भेदाः कृताः सन्ति, तानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति चाष्टौ योगाङ्गान्युच्यन्ते। तत्र—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। शौचसन्तोष-तपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। इत्येवं यमनियमाभ्यामन्तःकरणवृत्तौ शुद्धयां सत्यां साधको योगमार्गेऽग्रेसरो भवति। आसनञ्च तासां शारीरिक-क्रियाणां नामोच्यते, याभिः शरीरं मनश्च सुस्थिरे भवतः। तदुक्तञ्च पूज्यपादेन महर्षिणा 'स्थिरसुखमासनमिति'। रेचककुम्भकपूरक-द्वारेण शनैःशनैः प्राणवायोर्वशीकरणमेव प्राणा-

याम आख्यायते। यतो हि मनसा वायोः साक्षात्सम्बन्धो विद्यतेऽतश्च प्राणवायोर्वशीकारे मनः स्वत एव वशीभवति। कूर्माङ्गसंवरणवद्विषयेभ्यः इन्द्रियनिरोधः प्रत्याहारः समाम्नायते। अन्तर्जगतः पञ्चतत्त्वादिसूक्ष्मविषयेषु मनोबन्धो धारणा। धारणाभ्यासेन योगिनोऽन्तर्जगत्यनियन्त्रित-स्थितिर्जायते। भगवद्रूपध्यानमेव ध्यानमुच्यते। तत्र ध्यानावस्थायां ध्यानसाहाय्येन ध्यातुर्ध्येयस्य च भानन्तिष्ठतीत्येव ध्यानस्य द्वैतावस्थोच्यते। धारणाध्यानसमाधिभिरेकस्मिन्नेव विषये साधकस्य मनोऽभिनिवेशः संयम इत्यभिधीयते। इयं हि संयमक्रिया सविकल्पकसमाधौ गण्यते। संयमशक्त्या एव प्रभावो यतो महर्षयस्त्रिकालदर्शिनो जायन्ते स्म। अन्यच्च सर्वोपरीयं तस्य संयमसाधनस्यैव शक्तिर्यया महर्षयो विनाऽपि बहिश्चेष्टया केवलसंयमशक्त्यैव समुद्बोधिताः सन्तो विविधशारीरकविज्ञानं ज्यौतिषादिनानाबहिर्विज्ञानं चाविष्कृतवन्तः। संयमसम्बन्धिनां साधनानां वर्णनं पातञ्जलशास्त्रस्य विभूतिपादे विद्यते। सा हि समाध्यवस्थोच्यते, यत्र ध्यातृध्येयध्यानानां त्रयाणामपि स्वतन्त्रसत्ता विनष्टा जायते। केवलमेकस्य परमात्मन एव सत्ता प्रतीयते। इत्येवं यमनियमासनप्राणायामा बहिर्जगतः साधनानि, प्रत्याहारधारणाध्यानसमाधयश्चान्तरङ्गजगतः साधनानि इत्युच्यते। इत्येवं सुकौशलपूर्णानामष्टानामपि योगाङ्गानां साधनं कुर्वन्तः साधकाः शनैश्शनैरन्तःकरणवृत्तीर्निरुन्धन्तो मुक्तिपदं कैवल्यास्पदं प्राप्नुवन्तीति संक्षेपः।

पूज्यपाद-महर्षिपतञ्जलिप्रणीतं हि योगदर्शनं सर्वसाधनसार्वभौमः प्रसादोऽस्ति। कीदृशोऽपि साधकः स्याद्यथा मन्त्रयोगाधिकारी हठयोगाधिकारी लययोगाधिकारी राजयोगाधिकारी वा स्यादभक्तो वा भवेज् ज्ञानी वा त्यागी वा भोगी वा स्यात्सर्वेषामेवाधिकारिणां कल्याणादेशकं तद्दर्शनं विद्यते। चत्वारोऽपि साधनमार्गा विविधाश्च साम्प्रदायिकाः साधनसरण्यो भक्तिसाधनानि च सर्वाण्यप्येतस्यैव योगदर्शनस्य भित्तिमवलम्बन्ते। अष्टाङ्गयोगातिरिक्तैरन्यैरपि विविधैः प्रकारैर्योगप्राप्तिर्भवतीत्येतस्यापि योगसूत्रे समुल्लेखो वर्तते। जीवकल्याणकृता महर्षिणेदं साधु स्फुटमुपवर्णितं प्रमाणितं च यद् यद्यपि अष्टाङ्गयोगपथ एव सर्वोन्नत-साधारणो मार्गस्तथापि तदतिरिक्तान्यप्यसाधारणसाधनान्यपि सन्ति यथेश्वरभक्तिः, प्रणवादिमन्त्रजपः, प्राणायामसाधनं, पञ्चतन्मात्रादिदिव्य-विषयेषु मनोलयीकरणं, ज्योतिरादिभगवद्रूपध्यानं, मनःशून्यतासम्पादनमित्यादि। स्वेच्छया शुद्धमूर्त्यादिषु मनोनिरोधेनापि मनस एकाग्रता संसाध्यते। इत्थं हि मनसो वशीकारेणैकाग्र्यं सम्पादयन् साधकः कैवल्यं लब्धुमर्हतीति निश्चितम्। कोऽपि कुतोऽपि प्रचलेन्नाम योगशास्त्रविहितपथेनैकाग्रभूमितो निरुद्धभूमिं समुपागत्य स्थितिरेव योगसाधनमित्यत्र नास्ति कोऽपि संदेहलेशः।

योग-शास्त्रे समाधेर्भेदद्वयमभिहितं विद्यते, सविकल्पसमाधिर्निर्विकल्पसमाधिश्चेति। सविकल्पकसमाधौ साधकस्यान्तःकरणं निरुद्धत्वाद्भगवत्साक्षात्कारं कर्तुं प्रभवति, तत्रापि स्वात्मदर्शनमवशिष्यत एव। फलतः समाधेः पूर्वावस्थायामस्यां जीवस्यात्मसाक्षात्कारस्तु जायते, परन्तु भेदात्मकं द्वैतभानं तिष्ठति। निर्विकल्पकसमाधिस्तु स एवोच्यते यत्र प्रकृतेः पूर्णतया विलोपेन जीवब्रह्मणोरैक्यमुपजायते, परिणामतस्तत्रावस्थायामेकस्याद्वितीयस्य सच्चिदात्मनः परमात्मनो व्यतिरेकेणान्यभानं किमपि न स्यादिति। इदमेव योगमार्गस्य कैवल्यरूपं मुक्तिपदमुच्यते।

इह पदे समागत्य वेदोक्तानि सर्वाण्यपि मतान्येकतामासादयन्ति। अयमेव हि वेदान्तस्य ब्रह्मसद्भाव उच्यते। इयमेव हि भक्तिमार्गस्य परा भक्तिरभिधीयते। इयमेवान्यान्यदर्शनानामत्यन्तदुःखनिवृत्तिराख्यायते। अयमेव हि वेदोक्तात्मसाक्षात्कारः कथ्यते। अस्यामेवावस्थायां जीवस्य जीवत्वच्युतिर्जायते। स हि यतः प्रचलित आसीत्तत्रैव पुनरुपस्थितो जायते। सहि यदासीत्तदेव जायते। तत्त्वमसीति श्रुतिरत्रैव सार्थिका जायते इति।

# श्रीश्रीजी-महोदयानां संस्मरणम्।

ले० महामहाध्यापक—पण्डितराज श्रीगोपालशास्त्र (दर्शन केशरी)

चतुर्दशोत्तरोनविंशतितमेवर्षे (१९१४ ई०) इतः पूर्वं सप्तत्रिंशत्तमे वर्षे गुरुवर्य्याणां पूज्यपादानां म० म०श्रीमदन्नदाचरणतर्कचूड़ामणिमहोदयानामनुकम्पया मम महामण्डलप्रतिष्ठापकैस्तत्सञ्चालकप्रवरैश्च स्वर्गीयस्वामिज्ञानानन्दमहोदयैः सम्पर्कः समजनि। तदानीमुपदेशकमहाविद्यालयेऽहं व्याकरणसाहित्याऽध्यापकपदे प्रतिष्ठितो भूत्वा स्वर्गीयगुरुवर्य्यैस्तथा स्वर्गीय पं० शशिभूषणस्मृतितीर्थैः सह: मिलित्वा श्रीभारतधर्ममहामण्डलभवनस्य व्यायव्यकोणस्थिते भव्यप्रकोष्ठे स्वर्गीयस्वामिदयानन्द-विवेकानन्द-परमानन्दादिभिः स्वशिष्यैः परिवेष्टितं पूज्यपादं जीर्णकूर्चं बृहज्जटं विशालकायं दिव्यमूर्त्ति श्रीज्ञानानन्दमहोदयस्वामिवर्य्यं विलोक्य मम मनसि महान् पवित्रभाव उदपद्यत तमिह वर्णयितुमसमर्थोऽस्मि। केवलं सङ्केतयामि पाठकान् यत्तदानीं श्रीभारतधर्म-महामण्डलकृत्यं विलोक्य स्वामिदयानन्दं च स्वगुरु-पार्श्वे स्थित्वा तदुच्यमानं कमपि ग्रन्थं लिखन्तं विलोक्य विवेकानन्दादींश्च स्वशिष्यान् व्यावहारिकं किञ्चिदुपदिशन्तं श्रीश्रीजीमहाराजापरपर्य्यायं सर्वकलाकोविदं कर्मयोगपरायणं प्राचीनमहर्षिस्मरण-मेव स्वाकारेण कारयन्तं स्वामिवर्य्यञ्च प्रत्यक्षीकृत्य शिवराजविजयोपन्यासोपनिवद्धं शिवराजगुरुं स्वामिरामदासमेवाहममन्ये। तदानीमेवाहं मनसि व्यतर्कयम्, यदहो यथा तस्मिन्नुपन्यासे हिन्दूसूर्य्यं शिवराजं दीक्षयित्वा स्वामी समर्थरामदासो गुरुः हिन्दुराष्ट्रं समुद्धृतवान्, तथैवायं श्रीजी-महाराजो दयानन्द-विवेकानन्द-परमानन्द-योगानन्दादीन् स्वशिष्यान् दीक्षितान् विधाय हिन्दुराष्ट्रं समुद्धर्तु-मिच्छति। यथा च तस्याश्रमः परमपवित्रो राष्ट्रहिता-हितचिन्तापरान् विशिष्टानेव संन्यासिनो विभर्त्ति स्म, तथैवायमपि श्रीभारतधर्ममहामण्डलाख्यो महा-नाश्रमो राष्ट्रहितकृतः सर्वान् एवैमान् स्वामिनः स्वकुक्षिप्रदेशे संस्थापयति।

इत्येवं वितर्कयन्नेवाहं श्रीभारतधर्ममहामण्डलत-सञ्चाल्यमाने उपदेशकमहाविद्यालयाख्ये महति संस्थानेऽध्यापयितुंप्रवृत्तः। तत एवारभ्य ग्रन्थप्रकाशन-विभागे स्थितोऽहं श्रीश्रीजीमहाराजस्य सर्वाङ्गीणां चतुरस्रां प्रतिभां पर्य्यालोचयम्। स हि एकस्मिन्नेव समये दर्शनग्रन्थं लेखयति, महामण्डलस्थकर्मचारिणां कार्यकलापं पश्यति। देशदेशान्तरेषु सम्प्रेष्यमाणानि स्वप्रियशिष्यश्रीप्यारेकृष्णकौलहस्तलिखितानि पठित्वा तत्र तत्र प्रेषयितुं तेषां सङ्केतानि लेखयति। उदयपुरराज्यस्य न्यायाधीशः श्रीप्यारेकृष्णकौलमहा-शयस्ततोऽवकाशं गृहीत्वा स्वामिपादानामाज्ञया अधि-वेशनादिषु निमन्त्रणपत्रादिप्रेषणे स्वगुरुसाहाय्यमा-चारतिस्म। अद्यत्वे स महाशयः स्वामिपादानामभावे महामण्डले स्थितः सर्वकार्य्यसञ्चालनकृत्यं करोति। देशदेशान्तरतः समागतानतिथिवर्गांश्च कुशल-स्वागतादिकं पृच्छति। न्यायालये प्रचलतामभियोगानां विजयोपायं दिशति। इत्येवं बहुप्रतिभाकृत्यं कुर्वत-स्तान् स्वामिपादान् विलोक्य महामण्डलीयाः सर्वे एव तान् बृहस्पतितुल्यानेव सम्मन्यन्ते स्म। इत्येवं विलक्षणप्रतिभः श्रीस्वामिज्ञानानन्दमहोदयः स्वयं लेखनीन्तु गृहीतवानेव नहि, किन्तु अन्यै रेव लेखकैः सदा नियमेन स्वाभिप्रायं लेखयन् संस्कृतभाषायां हिन्दीभाषायां इंग्लिशभाषायां वङ्गभाषायाञ्च परः शतान् ग्रन्थान् लेखितवान्। धर्मकल्पद्रुम-धर्मविज्ञान-प्रभृति बृहतो ग्रन्थाश्चैभिःस्वशिष्य स्वामिदयानन्दहस्तेन लेखिताः। एतेषां वैशिष्ट्यमनुकरणीयं विद्यते। एभिश्च स्वनिर्मित ग्रन्थेषु परःशतेष्वपि सत्सु एकस्मिन्नपि स्वकीयं नामादिकं नैव प्रदत्तं विद्यते। यस्य महर्षेर्य-स्मिन्ग्रन्थे नामापेक्षितमासीत् तस्यैव महर्षेस्तस्मिन्

ग्रन्थे नाम विद्यते। यथा कर्ममीमांसायां भरद्वाजमहर्षेः, मध्यमीमांसायां (दैवीमीमांसायाम्) अङ्गिरसो महर्षेरभिधानं विद्यते। एवमेव सर्वत्र ग्रन्थेषु क्वापि महर्षीणां, कुत्रचित् कस्यापि नामैव नास्ति निर्नामैव विद्यते सग्रन्थः परन्तु श्रीश्रीजी महाराजस्य कुत्रचनापि ग्रन्थे नाम नविद्यते। इत्थङ्कुतस्तेषामनासक्तियोगोदृश्यते एषणात्रये। सम्प्रति संन्यासिनोऽपि लोकैषणायां संसक्ता दृश्यन्ते। परन्तु तत्रैव स्वामिपादाः श्रीज्ञानानन्दमहोदयास्तु एषणात्रयशून्या एवासन्। तेषामाविर्भावोऽपीह विलक्षणप्रकारेणैवासीद्। भाद्रकृष्णाष्टम्यामर्द्धरात्रे वङ्गप्रदेशे ब्राह्मणकुले गृहीतजन्मानस्ते सर्वदा हिन्दीभाषायामेव निजव्यवहारं कृतवन्तः। वङ्गभाषाव्यवहारस्तु समागतेषु वङ्गदेशीयमित्रेष्वेव भवतिस्म।

एवं हि प्रभावः स्वामिवर्याणामासीद् यद् यदाहि ते भारतीयनृपतिभिः सह वार्ता कुर्वन्ति स्म तदैव ते तद्वशगा भूत्वा स्वसर्वस्वमेव दातुमुत्सुका भवन्ति स्म। श्रीभारतधर्ममहामण्डले सर्वे एव भारतोया राजानो द्रव्यसहायका अभूवन्। खैरोगढनगरेश्वरी श्रीसुरथकुमारी नाम्नी राज्ञी षड्लक्षरूप्यकाणि दानरूपेण श्रीस्वामिवर्य्याणां ज्ञानानन्दमहोदयानां हस्ते दत्वा महामायाट्रष्ट-नाम्नाऽक्षय्यनिधिमेव धर्मरक्षायै समर्पितवती। एवमेव अन्येषामपि भारतीयनृपतीनां बहूनि दानपत्राणि श्रीभारतधर्ममहामण्डलद्वारा धर्मप्रचारकरणाय सन्ति। स्वामिवर्य्यैः सनातनधर्मस्य हिन्दुसमाजस्य च साधुसेवाविहिता विद्यते। पश्यन्तु—श्रीमच्छ्रीराद्दिशङ्कराचार्य्यैः प्रतिष्ठापितेषु चतुर्ष्वपि पीठेषु ज्योतिष्पीठं श्रीवदरिकाश्रमस्थमुच्छिन्नमासीत्। तस्याभ्युद्धारः स्वामिपादैरेव कृतः। सम्प्रति तस्य पीठस्याधिपतयः पूज्यपादाः श्रीस्वामिब्रह्मानन्दमहोदया अस्माकं गुरुवर्य्या एषामेवानुरोधेन ज्योतिष्पीठाधीश्वरनाम्नाऽस्मानमुद्घोषयन्ति, तेषामपि सर्वजनचमत्कारो महिमा विद्यते। तेहि केभ्यश्चनापि द्रव्यसंग्रहं न कुर्वन्ति। स्वयं स्वसिद्धिबलेनैव सर्वमपि स्वीयं लौकिकं व्यवहारं राजव्यवहारवच्चालयन्ति। अस्तु अलं प्रसक्तानुप्रसक्तचर्चया। स्वामिज्ञानानन्दमहोदया यावज्जीवं श्रीभारतधर्ममहामण्डलद्वारा भारतीयसंस्कृतेः आर्य्यमर्य्यादाया हिन्दुसमाजस्य संस्कृतभाषायाः श्रीसनातनधर्मस्य हिन्दीभाषायाश्च यावती समभ्युन्नतिःसेवा वा कृता सा स्वर्णाक्षरैः समुल्लेखनीया विद्यते। श्रीभारतधर्ममहामण्डलभवने यानि च भावमयानि चित्राणि दृश्यन्ते, तानि सर्वाण्यपि स्वामिवर्य्याणामेव कल्पनासमुद्भूतानि। उपदेशकमहाविद्यालयप्रतिष्ठया सर्वेभ्यश्च धर्मप्रचारकेभ्यस्तत्संरक्षकेभ्यो विद्वद्भयो विभूतिमद्भ्यो नररत्नेभ्यो मानदानविभागतो गुणेपूजात्मना सम्मानोपाधिप्रदानेन—

"यद्यद्विभूतिमत्सत्वं श्रीमदुर्जितमेव वा तत्तदेवाव गच्छ त्वं मम तेजोंऽशसम्भवम्।" इति भगवद्वाक्यस्येमे स्वामिवर्य्याः परमोपासका आसन्।

वेदस्य काण्डत्रयं विद्यते। ज्ञानकाण्डमुपासनाकाण्डं कर्मकाण्डञ्चेति। तत्र ज्ञानकाण्डीयश्रुतीनां समन्वयकरणपि दर्शनं विद्यते वेदान्तदर्शनं श्रीव्यासमुनिप्रणीतं ब्रह्मसूत्रापरपर्य्यायमुत्तरमीमांसादर्शनं, कर्मकाण्डश्रुतीनामपि समन्वयकरं पूर्वमीमांसानामकं जैमिनिमुनिप्रणीतं कर्मकाण्डदर्शनमस्ति। परन्तु उपासनाकाण्डस्थश्रुतीनां समन्वयकरं मध्यमीमांसादर्शनमङ्गिरोमहर्षिप्रणीतं स्वामिवर्य्यैरेव प्रकटितम्, तथा कर्मरहस्यपरिपोषकं विलुप्तं भरद्वाजमुनिप्रणीतं कर्ममीमासादर्शनं स्वामिवर्य्यैरेव प्रकाशितम्। इत्येव संस्कृतवाङ्मयमहार्णवस्यापि समुद्धारोऽतुलनीयः स्वामिपादैर्विहितो विद्यते।

स्वामिवर्याणांमहात्म्यवर्णनमस्मिन्संक्षिप्तलेखेऽसम्भवि वर्तते। एभिर्हि यथा पुरुषसमाजस्य सेवोपदेशकविद्यालयमहामण्डलादिसंस्थापनया कृतास्ति तथैवार्य्यमहिलामहाविद्यालयधर्मसेविकाविद्यापीठादिप्रतिष्ठापनया वाणीपुस्तकमालादिनाम्ना ग्रन्थमालाप्रतिष्ठापनया च आर्य्यनारीसमाजस्यापि अवर्णनीयाभ्युन्नतिः सम्पादिता विद्यते। पुरुषवर्गे श्रीदत्तात्रेयग्रन्थमाला-श्रीसूर्य्यग्रन्थमाला - सूर्य्योदयादिसमाचारपत्र-

प्रकाशनेन, नारीसमाजे च वाणीपुस्तकमाला-आर्य्य-महिलापत्रिकादिप्रकाशनेन च साधुधर्मशिक्षाप्रचार एभिः कृतो विद्यते। पुरुषवर्गे चैषां धर्मप्रचारकः स्वामिदयानन्द आसित्। नारीवर्गे च धर्मप्रचारिका श्रीमती विद्यादेवी विद्यते। सेयं श्रीमती विद्यादेव्यपि स्वोद्योगेन सम्यक् द्रव्यसंग्रहं कृत्वार्य्यमहिलामहाविद्यालयस्याभ्युदयं विदधती निजगुरुवर्य्याणां स्वामिवर्य्याणां मनस्सन्तोषकरीं सेवां कृतवती करोति, चाधुनापि। इङ्ग्लिशविभागे च इण्टरमिडियटकलाशालाया आचार्य्यापदं धृतवती श्रीसुन्दरी देव्यपि साधु स्वगुरुकार्य्यं समेधयतीति स्त्रीवर्गस्य पुरुषवर्गस्य चोभयोरेव समाजयोः समानामेवसेवां कुर्वन्ती हिन्दुधर्मस्य विराड् धर्मसंस्थेयं श्रीभारतधर्ममहामण्डलाख्याऽतिप्राचीना स्वामिवर्य्यैः संस्थापिता। सम्प्रति अत्यद्भुतप्रभावाणां स्वामिवर्य्याणामभावे तच्छिष्याः सर्वैर्मिलित्वा परस्परं भावयन्त ऐकमत्येन "सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् देवा भागं यथापूर्वे संजानाना उप सते"। "परस्परं भावयन्त. श्रेयः परमवाप्स्यथ।"

इत्यादि श्रुतिस्मृतिवाक्यानि संस्मरन्तोऽवतारीभूतानां स्वामिपादानामपूर्णं कृत्यं पूरयन्तु। तदीयं प्रारब्धं धर्मकार्य्यं च दिने द्विगुणितं रात्रौ चतुर्गुणितं समेधयन्तु इत्यभिधाय विरमामि विस्तरात्।

---

## मंत्र-महौषधमन्दिरे शोकोद्गारः।

( श्रीरामबालकशास्त्री (सन्देश-संपादकः) 'सन्देश'—कार्यालयः, नईबस्ती, वाराणसी।

सं० २००७ वैक्रमाब्दे माघकृष्णसप्तम्यां चन्द्रवासरे (२९।१।५१) अपराह्णे वादनद्वये स्थानीय-भेलूपुरस्थेऽस्मिन् मंदरे तांत्रिकशिरोमणीनां श्रीमतां पं० शारदाप्रसादमिश्र (औपनिषद) 'सप्ततीर्थ' महोदयानां साभापत्ये एका विशिष्टा गोष्ठी संजाता। तत्र सर्वतंत्रस्वतंत्राणां योगिवर्याणां विद्यावयस्तपोवृद्धानां श्रीज्ञानानन्दस्वामिमहोदयानां पंचोत्तरशतवर्षीयाणां ब्रह्मीभावावसरे वयं वाराणसेया विद्वांसः शोकसन्तप्तहृदयाः परमात्मानं प्रार्थयामो यन्नश्वरमिदं देहं विहाय परब्रह्मणि विलीनः कैवल्यपदमाढ् महापुरुषः शाश्वतिकीं परां शान्तिमुपगच्छेदिति। प्रस्तावममुं स्वीकृतवन्तः सर्वेऽत्रत्याः समुपस्थिता विद्वांसः यतो वै भुवि सुदुर्लभं पुरुषरत्नमेनं विहाय समस्त सनातनोया जनता साम्प्रतं स्वीयामनाथतामनुभवति।

अथानेन महामनीषिणा स्व० श्रीज्ञानानन्दस्वामिमहोदयेन स्वकीयेऽस्मिन् मण्डले पञ्चाशद्वर्षावधि निगूढतमनिगमागमपथप्रदर्शकपुस्तकानां प्रणयनेन तेषां प्रकाशनेन सर्वतोभावेन तेषां प्रचुरप्रचारेण च महानुपकारः कृतः संरक्षिता च भारतीया संस्कृतसंस्कृतिरिति किंबहुना प्रलपनेन। तत्रैव समुपस्थितविद्वन्मण्डल-प्रतिनिधिना पं० श्रीसरयूप्रसादशास्त्रिणा (द्विजेन्द्रेण) तथोक्तमन्दिरसंचालकेन स्वरचितश्रद्धाञ्जलिपाठः कृतः अनन्तरं गोष्ठी विसर्जिता।

---

सर्वतंत्रस्वतंत्राणां यतिप्रवराणां भारतधर्ममहामण्डलसंस्थापकानां श्री १०८ मतां स्वामि 'ज्ञानानन्द'-
महाराजमहोदयानां ब्रह्मीभावमुपलब्ध्य समर्पितोऽयं

# श्रद्धाञ्जलिः !!

( १ )

कालेऽस्मिन् कलिना नितान्तविषमे धर्मेष्वलं सर्वशः
शैथिल्यं गमितेषु भारतमहीमध्येऽवतीर्णो गुरुः ।
सम्प्रावर्त्तयदत्र धर्मविषये विष्वङ् महामण्डलं
'ज्ञानानन्दयतिः' स शाश्वतपदं विन्दन् तिरोऽभूदितः ॥

( २ )

नेतारःसुनृपाश्च धर्मगुरवः सर्वेऽपि यस्योत्तमै-
रारम्भैरुपलभ्य धर्मसरणिं स्वैः स्वैर्गुणैरन्वयुः ।
यत्सम्प्रेरणलब्धचारुमतयः स्वैरित्वदोषत्यजः
सन्मार्गं खलु शिश्रियुश्च सुजनाःसिद्धान्तमाशिश्रियन् ॥

( ३ )

विद्वांसोऽप्युपदेशकाः सुरगुरुप्रस्पर्द्धिवाग्वैभवाः
स्वाध्यायेन विनिर्मिता बहुतरा धर्मप्रचारव्रताः ।
येनाऽसौ यमिनांवरोऽद्य नयनाध्वानं सपद्युत्सृज-
न्नस्माकं हृदयेषु भात्यातितरां धाम श्रयन् भास्वरम् ॥

( ४ )

मोहं शोकमतीत्य यत्पदमिह श्रुत्या समुद्घोषितं
'ज्ञानानन्दगुरुः' स्ववेदगुरुको भुक्त्वायुरूर्ध्वं शतात् ।
प्राप्तस्तत्पदमादधाति हृदि नः स्वादर्शमित्युच्छ्रितं
धर्मादेव परत्रचेह च सुखं लभ्यं जनैः स्यादिति ॥

( ५ )

वयं महामण्डलमध्यचारिणः सुहृत्समेताः सकलद्विजेन्द्राः ॥
तस्मिन् परेधाम्नि, विलीयमाने श्रद्धाञ्जलिं शोकहृदाऽर्पयामः ॥

शोकसन्तप्तहृदयः—

'मंत्रमहौषधमन्दिरम्'
बी० ६।६४ मेलूपुरम्
काशी ।

श्रीसरयूप्रसादशास्त्री "द्विजेन्द्रः"
( काशीस्थसेण्ट्रलहिन्दूस्कूल-अध्यापकः )
माघे कृष्णे ७ सोमवासरे सं० २००७ वि० ।

# सद्गुरु-स्मृतिः ।



[ "ज्ञान"—खण्डेन "आनन्द"—खण्डेन च संवलिता ]

*(श्रीविन्ध्येश्वरीप्रसादशास्त्रिणा "सूर्योदय"—सम्पादकेन विरचिता, तदात्मजेन श्रीयुक्तश्रीशदेवशर्मणा मिश्रेण कृतया हिन्दीटीकया समलङ्कृता )*

"बाले बालो विदुषि विबुधो गायके गायकेशः, शूरे शूरो निगमविदि चाऽऽम्नायलीलागृहं यः ।
सिद्धे सिद्धो मुनिषु च मुनिः सत्सु सन् वृद्धवृद्धः, प्रौढे प्रौढः किमिति वचसा तादृशो यादृशेषु ॥
मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितोऽसौ, दीने दीनः सुखिनि सुखवान् भोगिनि प्राप्तभोगः ।
मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी, धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः" ॥

—कस्यचित् ।

## मङ्गलाचरणम् ।

अन्तर्दुरूहतमभीमतमस्समूहो विघ्नश्च शश्वतिक-साधु-विधान-निघ्नः ।
देवस्य यस्य महसा सहसाऽस्तमेति धीनायको मम स एव विनायकोऽस्तु ॥ १ ॥

हिन्दी—अन्तःकरणस्थित भयावह अज्ञान समूह तथा सज्जनों के कार्यों के बाधक विघ्न, जिसकी कृपा से शीघ्र नष्ट हो जाते हैं, वह श्रीगणेशजी इस कार्य में मेरी बुद्धि की प्रेरणा करें ॥ १ ॥

श्रेयो निःश्रेयसं दद्याद्धाद्ध्वान्तं त्रिरूपतः । साद्या वन्द्याऽनवद्या मे विद्या विद्योततां हृदि ॥२॥

हिन्दी—जो अभ्युदय और निःश्रेयसका प्रदान करती हैं, जो अपने तीनों रूपों से अज्ञान का नाश करती हैं, वही वन्दनीया, आद्या, विशुद्धा, विद्या ( सरस्वती ) मेरे हृदय में सदा विराजें ॥ २ ॥

ज्ञानानन्दं गुरुं ध्यात्वा नत्वा तत्पादपङ्कजम् । स्मृत्वा तदुपदेशांश्च क्रियते "सद्गुरुस्मृतिः" ॥३॥

हिन्दी—गुरुदेव श्री ज्ञानानन्द जी महाराज का ध्यान कर, उनके चरणों को प्रणाम कर तथा उनके उपदेशों का स्मरण कर इस "सद्गुरुस्मृति" की रचना करता हूँ ॥ ३ ॥

## श्रीचरणस्मरणम् ।

आदर्शो दर्शनानामपि मुकुटमणिर्योगपारङ्गमानां
सिद्धानां सुप्रसिद्धोऽमितमहिमखनिर्ज्ञानरत्नाकराणाम् ।
संशास्ता यो नृपाणां निधिरतिमहसामाश्रयः सज्जनानां
ज्ञानानन्दो गुरूणामपि परमगुरुर्ब्रह्मधाम प्रतस्थे ॥ ४ ॥

## श्रीचरणका स्मरण ।

हिन्दी—दर्शनशास्त्रके आदर्श, योगीश्वरोंके मुकुटमणि, सिद्धोंमें सुप्रसिद्ध, ज्ञानरूपी रत्नके आकरोंके अनन्त महिमान्वित खान, राजाओंके शासक, अतितेजस्विताके निधि, सज्जनोंके आश्रय, और गुरुओंके भी परमगुरु श्रीज्ञानानन्दजी महाराज निर्वाण पद को प्राप्त हुए । ४ ।

भाद्रे द्विशून्यनवभूयुतवैक्रमेऽब्दे कृष्णे वसौ जनुरभूद् भवतोऽर्धरात्रे ।
सप्ताधिके मृतिरपि द्विसहस्रयुक्ते माघेऽसिते शरतिथावधिकाशि कल्ये ॥५॥

संवत् १९०२ वैक्रमीय भादोंको कृष्णपक्षीय अष्टमी (जन्माष्टमी) की अर्द्धरात्रिमें आपका जन्म हुआ था और वैक्रमीय २००७ माघ कृष्ण पंचमी को ब्राह्ममुहूर्त्तमें श्रीकाशी धाममें आपका निर्वाण हुआ ॥५॥

श्रुत्या निदर्शितमहो शतवर्षमायुः सत्ये युगे तदपि सत्यमभूत् कलौ तु ।
योगेन संयमयुतेन तपोबलेन पञ्चाधिका व्यतिगता भवतः शताब्दी ॥६॥

हिन्दी—"शतायुर्वै पुरुषः" इस वेदसिद्धान्तानुसार मनुष्यों की आयु प्रायः सौ वर्ष की मानी जाती है। यह अधिकतर सत्ययुगके लिये लागू होता है, ऐसा माना जाता है। 'कलौ षष्टिः परं वयः" इसके अनुसार कलिमें तो साठ वर्ष ही पूर्णायु मानी गयी है। किन्तु आप अपने योग, संयम और तपोबल से एक सौ पाँच वर्ष तक जीवित रहे ॥ ६ ॥

## अथ ज्ञानखण्डोपक्रमः ।

याऽऽस्ते प्रकृत्यनुकृतिर्गदिता कला सा विज्ञानमस्ति प्रकृतावधिकार एव
एतद्द्वयस्य न गतिः परमात्मतत्त्वे तद्धाम दर्शयति यद् भुवि दर्शनं तत् ॥ ७ ॥

### ज्ञानखण्डका आरम्भ ।

हिन्दी—प्रकृतिकी नकल करनेका नाम कला (Art) है और प्रकृतिके ऊपर आधिपत्य करनेका नाम विज्ञान (Science) है। प्रकृतिसे ही सम्बन्ध रखनेके कारण ये दोनों ही कलाशास्त्र और विज्ञानशास्त्र प्रकृत्यतीत परमात्माका ज्ञान करानेमें असमर्थ हैं। जो ईश्वरतत्वका दर्शन कराता है, उसे ही दर्शनशास्त्र कहते हैं।७॥

सोपानपङ्क्तिमधिरुह्य यथा प्रकामं प्रासादपृष्ठमपियन्ति नरो दुरापम् ।
एकैकभूमिमधिकृत्य हि दर्शनानां स्वात्मस्वरूपमनघःप्रतिपद्यतेऽत्र ॥ ८ ॥

हिन्दी—जैसे सीढ़ियोंसे दुरारोह प्रासाद पृष्ठ पर भी मनुष्य चढ़ जाते हैं, उसी प्रकार दर्शन शास्त्रकी एक एक भूमिका अपने अधिकारके अनुसार आश्रय करता हुआ मनुष्य निष्पाप बनकर अपने सच्चे स्वरूपका साक्षात्कार करता है ॥ ८ ॥

आर्षप्रबोधसुविरोधनिरोधमेवं सम्पाद्य दार्शनिकतत्त्वसमन्वयेन ।
उन्मूलितोऽत्रभवता भवता समूलं विद्वत्समूहहृदयस्थमहान्धकारः ॥ ९ ॥

हिन्दी—जो आर्षज्ञान पण्डितोंकी दृष्टिमें भी परस्पर विरोधी माना जाता था, उस दार्शनिक तत्वका इस प्रकार विरोध परिहार और परस्पर उसका समन्वयकर आपने विद्वानोंके हृदयमें बैठे हुए नितान्त भयङ्कर अज्ञानान्धकारको समूल नष्ट कर दिया है ॥ ९ ॥

तं गौतमं बुध ! भवन्तमुशन्ति केचित् केचित् कणाद मपरे च पतञ्जलि त्वाम् ।
सांख्यस्य सेश्वरतया* प्रतिपादनेन ज्ञानाग्रगण्य-कपिलं निगदन्ति चाऽन्ये ॥ १० ॥

हिन्दी—आपको कुछ लोग न्यायशास्त्र प्रणेता गौतम मानते हैं, कुछ लोग वैशेषिकाचार्य कणाद समझते हैं, कुछ सज्जन योगशास्त्र प्रवर्त्तक पतञ्जलि कहते हैं, तथा कुछ विद्वान् सांख्य शास्त्रको सेश्वर सिद्ध करने के कारण आप को ज्ञानियों में अग्रगण्य कपिल मानते हैं ॥ १० ॥

( आज तक के विद्वानों का यह मत है, कि सांख्य निरीश्वर वादी दर्शन है। क्योंकि इस पर आर्ष भाष्य नहीं मिलता । जो भाष्य मिलता है, वह निःसन्देह बौद्धाचार्य प्रणीत है । श्री चरणने सांख्य को कैसे सेश्वर सिद्ध किया है इसको इस श्लोक की टिप्पणी से समझिये )

---

* पूज्यैः श्रीस्वामिचरणै र्बहुशो बोधितैः गुरुवर्य-महामहोपाध्याय-श्रीमदन्नदाचरणतर्कचूडामणिमहोदयैः "सांख्ये ईश्वरवादः" इतिशिरस्कः प्रबन्ध एकः सूर्योदयस्य सं० १९८२ वैक्रमीयाब्दयतृतीयायां प्रकाशितेऽङ्के प्राकट्यं नीतः । स च श्रीचरणानामभिप्रायद्योतक इति तत्प्रबन्धस्य केचनांशा अधोनिर्दिश्यन्ते—

वेदमूलकेषु परमपुरुषतत्त्वप्रकाशकेषु मुमुक्षुजनपरमपथ्येषु मननशास्त्रशिरोरत्नायमानेषु महाजनादृतेषु शिष्टजनपरिगृहीतेषु परमपूजनीयेष्वप्यास्तिकदर्शनेषु बहुविधा बहवो विलक्षणविप्रतिपत्तारो दृश्यन्ते श्रूयन्ते च । तत्रापि विद्वांसोऽविद्वांसो बहव एव कपिलस्य तत्प्रणीतस्य सांख्यस्य च निरीश्वरत्वं ख्यापयन्तः परमं प्रमोदमाप्नुवन्ति । तत्र ये विवेकहीनाः परप्रत्ययनेयमतयः परवचनप्रतिध्वनिमात्रवचनास्ते सर्वथैकादशीतरतिथिमलवदुपेक्षणीयाः । ये तु सांख्यस्य सेश्वरत्वं सम्यगवगच्छन्तोऽपि स्वीयसंस्कारवशतः कपिलस्य सांख्यस्य च निरीश्वरत्वं ख्यापयन्ते, सर्वमवगच्छन्तोऽप्यन्यथाजानन्तोऽन्यथा कुर्वन्तोऽन्यथा प्रतिपादयन्तस्ते आत्मन एव निरीश्वरम्मन्यत्वं ख्यापयन्तो जाग्रत्पुरुषा इव न कथमपि बोधयितुं शक्यन्ते । निष्पक्षपातानां विवेकिनां विदुषां विप्रतिपत्त्यार्षभाष्यसद्भावाभावं सन्दिग्धार्थकसूत्रजातं चान्तरेण न किञ्चन कारणमन्यदीक्ष्यते ।

तत्रापि वक्तव्यमस्तीदं यद् —"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानं च पश्येत्" इत्यादिश्रुतिविज्ञापित-माहात्म्यस्य, स्मृतिपुराणेतिहासादिप्रसिद्धस्य, परमर्षिणा वेदव्यासेनापि स्वकृतशास्त्रेषु मुक्तकण्ठं बहुशः प्रगीतस्य, नित्यमार्य-जातितर्पणवर्त्तितस्य, नित्यश्राद्धे देवस्थाने नित्यमर्चितस्य, सर्वाग्रे निर्गुणमात्मतत्त्वं साक्षात्कृतवतो लोके सम्यक् प्रकाशितवतश्च, शिष्टशिरोरत्नायमानस्य, निर्माणचित्तमधिष्ठाय जिज्ञासमानायासुरये तन्त्रमुपदिष्टवतः, सांख्यदर्शनप्रणेतुरादिविदुषो भगवतः कपिलस्य, तत्प्रणीतस्य सम्यग्ज्ञानं ख्यापयतः, तत्त्वविद्या-निर्गुणपुरुषविद्या-सांख्यादिभिर्बहुभिर्नामभिर्बहुधा प्रसिद्धस्य, "नास्ति सांख्यसमं ज्ञानम्" "ज्ञानं महद् यद्धि महत्सु राजन् वेदेषु सांख्येषु तथैव योगे । यच्चापि दृष्टं विविधं पुराणे सांख्यागतं तन्निखिलं नरेन्द्र !" इत्यादिभिः शास्त्रैः सहस्रशः प्रख्यापितमाहात्म्यस्य; "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तम् अव्यक्तात्पुरुषः परः" इत्यादिभिर्बहुभिः शास्त्रैः सुस्पष्टं स्मारितस्य, श्रुतिस्मृतिपुराणेतिहासादिषु बहुशः कीर्त्तितस्य, पतञ्जलि-वेदव्यासादिभिर्महर्षिभिरसकृदनुसृतमतस्य, निखिलदर्शनादर्श-भूतस्य, शास्त्रयुक्तिप्रमाणप्रबलप्रभावस्य सांख्यदर्शनस्य च निरीश्वरत्वं कथमपि स्वप्नेऽपि कल्पनयापि न शक्यते सम्भावयितुम्; परन्तु सूत्रजातस्य सम्यगर्थावगमेन सेश्वरत्वमेवावगन्तुं शक्यते । यथैतत्सम्भवति तथा सन्दिग्धार्थकसूत्रजातव्याख्यानप्रदर्शनेन क्रमशः प्रदर्श्यते । तथाहि—

"यत्सम्बधं सत् तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्" ( अस्यार्थः सुस्पष्टः )

नन्वेवं योगिनामतीतानागतविप्रकृष्टविषयकप्रत्यक्षेऽव्याप्तिरित्यत्राह—

रम्ये महामहिममण्डलमण्डपेऽस्मिन् संख्यातिगातिगुरुयागविधानदक्षम् ।
यज्ञस्वरूपपरिबोधविधैकविज्ञं त्वां जैमिनिं कतिचिदङ्ग ! परिब्रुवन्ति ॥ ११ ॥

हिन्दी—रमणीय महामहिमशाली महामण्डल के यज्ञमण्डप में सैकड़ों यज्ञ महायज्ञ सम्पन्न कराने के कारण तथा यज्ञस्वरूप के विज्ञान का परिपूर्ण ज्ञान रखने के कारण आपको कुछ विद्वान् जैमिनि का अवतार मानते हैं ॥११॥

"योगिनामबाह्यप्रत्यक्षत्वान्न दोषः"

अस्यार्थः—योगिनां ( योगजधर्म्मवतां सिद्धानां पुरुषाणाम् ) अबाह्यप्रत्यक्षत्वात् ( न विद्यते बाह्यं विषयेन्द्रियसन्निकर्षजन्यं प्रत्यक्षं येषां तेषां भावस्तत्त्वं तस्मात्, बहिरिन्द्रियसन्निकर्षाप्रयोजकबाह्यविषयप्रत्यक्षत्वाद् बहिरिन्द्रियानधीनालौकिकप्रत्यक्षशालित्वात् ) दोषः ( योगिप्रत्यक्षेऽव्याप्तिः ) न भवति । यतो लौकिकप्रत्यक्षस्यैव लक्षणमिदं कृतम् । अतो योगशक्त्या समधिगतसम्पदां योगिनामलौकिकप्रत्यक्षे तत्संगत्यभावेऽपि न दोष इति ।

अथवा तदपि लक्ष्यमास्तामिति प्रतिपादयितुकाम आह—

"लीनवस्तुलब्धातिशयसम्बन्धाद् वाऽदोषः"

अस्यार्थः—वा ( अथवा ) लीनवस्तुलब्धातिशयसम्बन्धात् ( लब्धः योगजधर्मेण प्राप्तः अतिशयः सामर्थ्यातिरेको येन सः लब्धातिशयः, लीनेषु कारणे कारणात्मना वा स्थितेषु वस्तुषु अतीतानागतविप्रकृष्टेषु पदार्थेषु लब्धातिशयः योगलब्धसामर्थ्यातिरेकः यः सम्बन्धः इन्द्रियसन्निकर्षः तस्मात्, योगिनामिन्द्रियसन्निकर्षायोग्येऽपि विषये योगजशक्त्या सर्वपदार्थमूले प्रकृतौ इन्द्रियसन्निकर्ष एव सर्वपदार्थेन्द्रियसन्निकर्षः तस्मात् योगजप्रत्यक्षमिति ) अदोषः ( अव्याप्तिदोषस्य अभावः ) इति ।

नन्वेवं योगेन ईश्वरप्रत्यक्षं दुर्घटम्, ईश्वरस्य प्रकृतिलीनत्वासम्भवादित्याशङ्कते—

" ईश्वरासिद्धेः "

अस्यार्थः—इन्द्रियसम्बन्धस्य ईश्वरासिद्धेः ( ईश्वरे परमेश्वरे परमात्मनि असिद्धेः असत्वात् ईश्वरस्य प्रकृतिलीनत्वासम्भवात् निर्गुणत्वाच्च तत्र इन्द्रियसन्निकर्षस्यासिद्धत्वादित्यर्थः ) योगजे ईश्वरप्रत्यक्षे ( ईश्वरविषयकयोगजप्रत्यक्षे ) अव्याप्तिः ( निरुक्तप्रत्यक्षलक्षणस्य अगमनं दोषः ) भवति ।

ननु ईश्वरस्यासत्त्वेनैव तद्विषयकयोगजप्रत्यक्षमेव नास्ति, क्व अव्याप्तिरित्याशयेन ईश्वरासत्त्वमाशङ्कते—

"मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः"

अस्यार्थः—मुक्तबद्धयोः ( मुक्तश्च बद्धश्च तयोः मुक्तपुरुषबद्धपुरुषयोः ) अन्यतराभावात् ( अन्यतरस्मिन् क्लेशादिरहिते मुक्तपुरुषे वा, क्लेशादिसम्बद्धे बद्धपुरुषे वा अभावात् ईश्वरत्वासम्भवादिति यावत् ) तत्सिद्धिः ( तस्य ईश्वरस्य सिद्धिः अस्तितानिश्चयः ) न सम्भवति ।

तयोरन्यतरत्र ईश्वरत्वस्वीकारे दोषं दर्शयति—

"उभयथाप्यसत्करत्वम्"

अस्यार्थः—उभयथा अपि ( ईश्वरः मुक्तो वा बद्धो वा उभयप्रकारेणापि उभयपक्षे अपि) असत्करत्वम् (सत् वर्त्तमानं जगत् करोतीति सत्करः तस्य भावः सत्करत्वं विश्वजनकत्वम् अधिष्ठातृत्वमिति यावत् तदभावः तदनुपपत्तिः असत्करत्वम् ईश्वरस्य विश्वजनकत्वं न ) सम्भवति । ईश्वरस्य मुक्तत्वे औदासिन्यात् बद्धत्वे सामर्थ्याभावात् जगदधिष्ठातृत्वरूपं कर्तृत्वं न सम्भवति । यद्वा असत्करत्वम् असज्जनकत्वं सत्कार्यवादानुपपत्तिः । उत्पत्तेःपूर्वम् असत्कार्यं जनयितव्यं चेत् तदर्थं कृतिमतश्चेतनस्य

